

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

॥ श्रीमते रामानन्दाचार्याय नमः ॥

॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीजानकीत्रैलोक्य विजयकवचम् ॥

*This text has been prepared by*
*Vishal Pandey (B.Tech IIT Kanpur)*
*with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara***
***Jagadguru Rāmānandāchārya***
***Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम् ।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम् ॥**

# अथ श्रीजानकीत्रैलोक्य विजयकवचम्

ॐ अस्य श्रीजानकी देव्याः कवचं लोक दुर्लभम् ।
तवस्नेहात्प्रवक्ष्यामि सर्वसाराख्यमुत्तमम् ॥

जगद्धात्री महाशक्तिर्महामायेति जानकी ।
तस्याः कवच विप्रेन्द्र कः क्षमो गुणवर्णने ॥

कवचं जानकी देव्यास्त्रैलोक्य विजयप्रदम् ।
यस्य प्रपठनान्मर्त्यलोक्य विजयी भवेत् ॥

पठनाच्छ्रवणाद्यस्य ब्रह्मा विष्णु शिवादयः ।
विश्वोद्भवलयादीनां शक्तिमन्तो भवन्त्यपि ॥

ध्यानं तस्याः प्रवक्ष्यामि सर्वेषां मुक्तिदायकम् ।
दुर्लभं चैव विबुधां सर्वदा शंकर प्रियम् ॥

अथध्यानम् -

सर्वशक्तिमयीं सीतां द्विभुजां सुस्मिताननाम् ।
गौरवर्णां विशालाक्षीं नीलवस्त्रधरां पराम् ॥

रक्तभूषण संयुक्तां रत्नरत्नोप शोभिताम् ।
सगुणां निर्गुणां चैव महामाधुर्य सान्विताम् ॥

गोलोकमण्डले रम्ये सन्तानक वनान्तरे ।
सखिभिः कोटिभिर्युक्तां रत्नसिंहासनस्थिताम् ॥

कोटिसूर्यप्रतीकाशां सच्चिदानन्द विग्रहाम् ।
परिपूर्णतमां शक्ति प्रभामण्डल मण्डिताम् ॥

सर्वेषां बीजरूपां च योगीन्द्रैरभि वन्दिताम् ।
श्रीरामवल्लभां सीतां चिन्तयेद्भक्त वत्सलाम् ॥

ॐ अस्य श्रीजानकी कवचस्य ब्रह्माऋषिः अनुष्टुप् छन्दः ।
श्रीजानकी आह्लादिनी शक्तिर्देवता सर्वकार्य सिद्ध्यर्थे जपेविनियोगः ॥

ॐ जानकी मे शिरःपातु भालंजनकनन्दिनी ।
नेत्रयुग्मं च वैदेही श्रोत्रयुग्मं वरानना ॥

सीता मे च मुखं पातु स्कन्धौ पातु हरिप्रिया ।
हृदयं में जगद्धात्री नाभीं मे रामवल्लभा ॥

महामाया कटिं पातु जानुनी धरणी सुता ।
पादयुग्मं सदापातु रक्ष कुल विनाशिनी ॥

पूर्वे तु मां सदा पातु राघवेन्द्रप्रियासखी ।
मूलप्रकृतिर्याम्यां च प्रतीच्यां सर्व वन्दिता ॥

सर्वशक्ति स्वरूपा च कौवेर्य्यां परिरक्षतु ।
इदं हि सर्वसाराख्यं जानक्याः कवचंपरम् ॥

भुक्ति मुक्ति प्रदातारं देवानामपि दुर्लभम् ।
मन्त्राणां बीजरूपञ्च बीजानां बीजमव्ययम् ॥

पावनं पावनानां च सर्व पापौघनाशनम् ।
सर्वाभीष्टप्रदं चैव सर्वारिष्ट निवारणम् ॥

सिद्धिदः साधकानां हि सर्वेषामर्थ दायकम् ।
श्रीरामचरणाम्भोजे दृढ़ भक्तिप्रदं शुभम् ॥

यः पठेद्धारयेन्नित्यं सदा सर्वगतः सुखी ।
सीता तस्य गृहंत्यक्त्वा नैव याति कदाचन ॥

विलिख्य भूर्यपत्रे च स्वर्णरथं धारयेद्यदि ।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥

जानक्याः कवचं नित्यं यः पठेद्वैष्णवोतमः ।
सर्वपाप विनिर्मुक्तो ब्रह्मानन्द सुखं लभेत् ॥

सर्वशक्तिमयी सीता गुणातीता चिदात्मिका ।
निमिषार्द्धे जगत्सर्वं करोति विकरोति च ॥

ईशानी सर्वजीवानां ब्रह्माणी ब्रह्ममन्दिरे ।
विष्णु गृहे च लक्ष्मी स्यात् पार्वती शंकरप्रिया ॥

माहेश्वरी पराशक्ति र्योगमायेति जानकी ।
नाना रूपधरा सीता क्रीडते रामसन्निधौ ॥

तस्यास्तु जानकी देव्याः कवचं देवि गोपितम् ।
गुह्याद्गुह्यतरं सारं न वक्तव्यं कदाचन ॥

यन्मया सर्वसाराख्यं तव स्नेहात्प्रकाशितम् ।
यस्मै कस्मै न दातव्यं प्राणात्प्रियतमं मम ॥

**॥ इति श्रीब्रह्मसंहितायां श्रीजानकीकवचं सम्पूर्णम् ॥**